# ॥ नवग्रहध्यानम् ॥

श्रीगणेशाय नमः ।

अथ सूर्यस्य ध्यानं - त्रिपुरासर्वस्वे

प्रत्यक्षदेवं विशदं सहस्रमरीचिभिः शोभितभूमिदेशम् ।
सप्ताश्वगं सद्ध्वजहस्तमाद्यं देवं भजेऽहं मिहिरं हृदब्जे ॥

अथ चन्द्रस्य ध्यानं - निःसृतमागमे

शङ्खप्रभमेणप्रियं शशाङ्कमीशानमौलिस्थितमीड्यवृत्तम् ।
तमीपतिं नीरजयुग्महस्तं ध्याये हृदब्जे शशिनं ग्रहेशम् ॥

अथ भौमस्य ध्यानं - आगमामृतमञ्जर्याम्

प्रतप्तगाङ्गेयनिभं ग्रहेशं सिंहासनस्थं कमलासिहस्तम् ।
सुरासुरैः पूजितपादपद्मं भौमं दयालुं हृदये स्मरामि ॥

अथ सौम्यस्य ध्यानं - भैरवतन्त्रे

सोमात्मजं हंसगतं द्विबाहुं शङ्खेन्दुरूपं ह्यसिपाशहस्तम् ।
दयानिधिं भूषणभूषिताङ्गं बुधं स्मरे मानसपङ्कजेऽहम् ॥

अथ जीवस्य ध्यानं - भैरवतन्त्रे

तेजोमयं शक्तित्रिशूलहस्तं सुरेन्द्रज्येष्ठैः स्तुतपादपद्मम् ।
मेधानिधिं हस्तिगतं द्विबाहुं गुरुं स्मरे मानसपङ्कजेऽहम् ॥

अथ शुक्रस्य ध्यानं - कुब्जिकासर्वस्वे

सन्तप्तकाञ्चननिभं द्विभुजं दयालुं पीताम्बरं धृतसरोरुहद्वन्द्वशूलम् ।
क्रौञ्चासनं ह्यसुरसेवितपादपद्मं शुक्रं स्मरे द्विनयनं हृदि पङ्कजेऽहम् ॥

अथ शनेर्ध्यानं - शुभदमागमामृते

नीलाञ्जनाभं मिहिरेष्टपुत्रं ग्रहेश्वरं पाशभुजङ्गपाणिम् ।
सुरासुराणां भयदं द्विबाहुं शनिं स्मरे मानसपङ्कजेऽहम् ॥

अथ सैंहिकेयस्य ध्यानं - वामकेश्वर तन्त्रे

शीतांशुमित्रान्तकमीड्यरूपं घोरं च वैडुर्यनिभं विबाहुम् ।
त्रैलोक्यरक्षाप्रदंमिष्टदं च राहुं ग्रहेन्द्रं हृदये स्मरामि ॥

अथ केतोश्च ध्यानं - तन्त्रसागरे

लाङ्गुलयुक्तं भयदं जनानां कृष्णाम्बुभृत्सन्निभमेकवीरम् ।
कृष्णाम्बरं शक्तित्रिशूलहस्तं केतुं भजे मानसपङ्कजेऽहम् ॥

॥ इति नवग्रहध्यानं सम्पूर्णम् ॥